अथ द्वाभ्यां रामं प्रति तद्वचनमाह—

**आहासइ अ रहुवइं मरणसमोब्भहिअरुद्धबाहुप्पीडो ।**
**बन्धुवहागअदुक्खो गिम्हुम्हासुक्खणइमुहो व्व महिहरो ॥ ८९ ॥**

[आभाषते च रघुपतिं मरणसमभ्यधिकरुद्धबाष्पोत्पीडः ।
बन्धुवधागतदुःखो ग्रीष्मोष्मशुष्कनदीमुख इव महीधरः ॥]

रघुपतिमाभाषते च । किंभूतः । मरणादपि समभ्यधिकं यथा स्यादेवं रुद्धो बाष्पोत्पीडो येन यस्य वा स तथा । वचनसौष्ठवाय कृतं संतापजनितमुखशोषेण वा जातमश्रुनिरोधं मरणादप्यधिकं मन्यमान इत्यर्थः । एवम्—बन्धूनां रावणादीनां वधेनागतदुःखः । क इव । ग्रीष्मोष्मणा शुष्कं नदीमुखं यस्य तादृशो महीधर इव । तथा च प्रथमपक्षे नदीमुखशोषबाष्पनिरोधयोर्महीधरविभीषणयोः, द्वितीयपक्षे त्वधिकात् ग्रीष्मोष्मसंतापयोस्तौल्यादुपमा ॥

**पहु वीसज्जेहि मह ता दहमुहकुम्भअण्णचलणणिवडिओ ।**
**पच्छा परलोअगअं छिवामि सीसम्मि मेहणाअं अ सुअम् ॥९०॥**

[प्रभो विसृज मां तावद्दशमुखकुम्भकर्णचरणनिपतितः ।
पश्चात्परलोकगतं स्पृशामि शीर्षे मेघनादं च सुतम् ॥]

हे प्रभो राम, मां विसृज आज्ञापय । तावत्तदा प्रथमं दशमुखकुम्भकर्णयोश्चरणेषु निपतितः सन् पश्चात्परलोकगतं मृतं मेघनादं च शीर्षे स्पृशामि । परामृशामीत्यर्थः । तावद्विसृज यावदेतावत्करोमीति वा ॥

अथ रावणादिसंस्कारमाह—

**महिअलपडिअविसंठुलहीसणविलावजाआणुअम्पेण ।**
**रामेण वि पवणसुओ आणत्तो रक्खसाहिवइसक्कारे ॥ ९१ ॥**

[महीतलपतितविसंष्ठुलविभीषणविलापजातानुकम्पेन ।
रामेणापि पवनसुत आज्ञप्तो राक्षसाधिपतिसंस्कारे ॥]

महीतले पतितस्य विसंष्ठुलस्य विपर्यस्तकरचरणादेर्विभीषणस्य विलापाज्जातानुकम्पेन रामेणापि राक्षसाधिपतेः संस्कारे दाहादौ पवनसुतो हनूमान् आज्ञप्तो नियुक्त इत्यर्थः ॥

अथ सुग्रीवसाहाय्योपसंहारमाह—

**णिहअम्मि अ दहवअणे आसंघन्तेण जणअतणआलम्भम् ।**
**सुग्गीवेण वि दिट्ठो पच्चुवअरस्स साअरस्स व अन्तो ॥ ९२ ॥**

[निहते च दशवदनेऽध्यवस्यता जनकतनयालम्भम् ।
सुग्रीवेणापि दृष्टः प्रत्युपकारस्य सागरस्येवान्तः ॥]

च पुनर्दशवदने निहते सति जनकतनयायाः सीताया लम्भं प्राप्तिमध्यवस्यता स्थिरीकुर्वता सुग्रीवेणापि सागरस्येव प्रत्युपकारस्य अन्तो दृष्टः । यथा सागरस्य पारो दृष्टस्तथा सीतोद्धाररूपप्रत्युपकारस्य निर्वाहरूपः पर्यन्तो दृष्ट इति सहोपमा । दुस्तरत्वेन सागरतुल्यस्य प्रत्युपकारस्य पारो दृष्ट इति साधर्म्योपमा वा ॥

अथ सरथमातलिविसर्जनमाह—

**काऊण अ सुरकज्जं रहुवइवीसज्जिएण कइअणपुरओ ।**
**जलहरगुप्पन्तधओ सग्गाहिमुहो रहो कओ माअलिणा ॥ ९३ ॥**

[कृत्वा च सुरकार्यं रघुपतिविसृष्टेन कपिजनपुरतः ।
जलधरव्याकुलायमानध्वजः स्वर्गाभिमुखो रथः कृतो मातलिना ॥]

सुराणां रावणवधरूपं कार्यं कृत्वा कपिजनानां पुरतो रघुपतिविसृष्टेनाज्ञप्तेन मातलिना च रथः स्वर्गाभिमुखः कृतः । ऊर्ध्वं प्रेरित इत्यर्थः । किंभूतः । जलधरेषु व्याकुलायमानो ध्वजो यस्य स तथा । ऊर्ध्वतो यन्त्रणात्तिर्यग्भावादिति भावः ॥

अथ रामस्यायोध्यासमागमेनाश्वासकमुपसंहरति—

**घेत्तूण जणअतणअं कञ्चणलट्ठिं व हुअवहम्मि विसुद्धम् ।**
**पत्तो पुरिं रहुवई काउं भरहस्स सप्फलं अणुराअम् ॥ ९४ ॥**

[गृहीत्वा जनकतनयां काञ्चनयष्टिमिव हुतवहे विशुद्धाम् ।
प्राप्तः पुरीं रघुपतिः कर्तुं भरतस्य सफलमनुरागम् ॥]

रघुपतिः पुरीमयोध्यां प्राप्तः । किं कृत्वा । जनकतनयां गृहीत्वा । सीतया सहेत्यर्थः । किंभूताम् । काञ्चनयष्टिमिव हुतवहे वह्नौ विशुद्धामुत्तीर्णाम् । यथा वह्नौ प्रवेशिता काञ्चनयष्टिरधिकरोचिष्मती भवति, तथा रक्षोगृहनिवासजन्यपरीवादमा-

र्जनाय वह्नौ परिक्षिप्ता सीताप्यधिकरोचिष्मती वृत्तेति निर्दोषत्वमुक्तम् । किमर्थम् । भरतस्य भक्तिरूपमनुरागं सफलं कर्तुम् । रामसिंहासनानवरोहणादिरूपायास्तद्भक्ते रामसमागम एव फलमित्याशयः । यद्वा—भरतस्य कृते स्वीयं स्नेहरूपमनुरागं सफलं कर्तुमित्यर्थः । समाप्तौ सफलत्वोत्कीर्तनेन शुभसूचनरूपं मङ्गलमप्युक्तम् ॥

अथ ग्रन्थसमाप्तिमाह—

एत्थ समप्पइ एअं सीआलम्भेण जणिअरामब्भुअअम् ।
रावणवह त्ति कव्वं अणुराअङ्कं समत्थजणणिव्वेसम् ॥ ९५ ॥

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे पञ्च(न्द)रहो आसासओ परिसमत्तो ।**

[अत्र समाप्यते एतत्सीतालम्भेन जनितरामाभ्युदयम् ।
रावणवध इति काव्यमनुरागाङ्कं समस्तजननिर्द्वेषम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये पञ्चदश आश्वासः परिसमाप्तः ।

एतद्रावणवध इति नाम काव्यमत्र समाप्यते । कविनेत्यर्थात् । कर्म कर्तरि वा । एतदेव स्कन्धकं तत्समाप्तिस्थानमित्यर्थः । किंभूतम् । सीताया लम्भेन प्राप्त्या जनितो रामस्याभ्युदयो यत्र वर्णितत्वेनेत्यर्थः । पुनः कीदृक् । सीतां प्रति रामानुरागस्य सेतुबन्धरावणवधादिरूपोऽङ्कश्चिह्नं यत्र तद्गतज्ञापकत्वात् । अथ च अनुरागपदरूपोऽङ्कः प्रत्याश्वासकान्तेऽसाधारणं चिह्नं यस्येत्यर्थः । एवं समस्तजनस्य द्वेषशून्यं सीतारामसंबन्धित्वेनानुरक्तसर्वजनमित्यर्थः ॥

सीतासंप्राप्तिदशाया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णा पञ्चदशी शिखा ॥
सेतुग्रन्थसमुद्रादर्था मणयो भयाकृष्टाः ।
उपदेशसहकृतेन्द्रियपटुभिः प्राज्ञैः परीक्ष्यन्ताम् ॥

चतुर्भूतारिशीतांशु( १६५२ )भिरभिगणिते साहसाङ्कस्य वर्षे
वर्षे जल्लालदीन्द्रक्षितिमुकुटमणेरप्यनन्तागमा(४०)भ्याम् ।
पञ्चम्यां शुक्लपक्षे नभसि गुरुदिने **रादामसेन** राज्ञा
विज्ञेनापूरितोऽयं तिथितुलितशिखो रामसेतुप्रदीपः ॥
सूर्याचन्द्रमसोरुदञ्चति कथा यावत्तथा दीप्यते
यावत्कौस्तुभकान्तिजालजटिला वैकुण्ठवक्षःस्थली ।
गङ्गावीचिभिरञ्चितो हरजटाजूटः समुज्जृम्भते
यावत्तावद**कब्बरे**ण जगती राजन्वती वर्तताम् ॥

इति श्रीश्रीमन्निखिलमहीमहेन्द्रमुकुटमणिमयूखमञ्जरीपिञ्जरीकृतकमलसकलसार्वभौमशिरोमणिश्रीमद**कब्बरजल्लालदीन्द्र**कृपाकटाक्षवीक्षितभानुभक्तिपरायणहृदयहर्म्यनिवासितनारायणमहाराजाधिराजश्रीश्री**रामदास**विरचितो रामसेतुप्रदीपो नाम ग्रन्थः परिपूर्णः ॥